वेदान्तपरत्रिवेणी

इन्द्रियाणां जडानां च विषयाणां च तादृशाम् ।
वैरस्यं ज्ञानपूर्वं यद्विरक्तिः सा प्रकीर्तिता ॥ १॥

जडौघान्नश्वराद्दृश्याद्बुद्धिवृत्तिं निवर्त्य च ।
चैतन्यप्रवणा कार्या भक्तिः सा परिकीर्तिता ॥ २॥

सर्वान्तरोऽस्मि घनचित्प्रकाशात्मेति या मतिः ।
महावाक्यविचारोक्ता सात्मज्ञप्तिः प्रकीर्तिता ॥ ३॥

एता हि यमुनागङ्गासरस्वत्योऽत्र सङ्गताः ।
त्रिवेणी सैव तत्रैव स्नानाद्रागाद्यघक्षयः ॥ ४॥

गुणत्रिवेणीदानं धीस्त्रियः कुर्यात्पुमानिह ।
पातकेच्छोद्भवो नात्र पुनरन्यत्र तूद्भवः ॥ ५॥

इति श्री परमपूजनीय श्रीवासुदेवानन्दसरस्वतीविरचिता
वेदान्तत्रिवेणी सम्पूर्णा ॥